# मन्त्रात्मकं श्रीमारुतिस्तोत्रम्

ॐ नमो भगवते आञ्जनेयाय महाबलाय स्वाहा ।

ॐ नमो वायुपुत्राय भीमरूपाय धीमते ।
नमस्ते रामदूताय कामरूपाय श्रीमते ॥ १॥

मोहशोकविनाशाय सीताशोकविनाशिने ।
भग्नाशोकवनायास्तु दग्धलङ्काय वाग्मिने ॥ २॥

गतिनिर्जितवाताय लक्ष्मणप्राणदाय च ।
वनौकसां वरिष्ठाय वशिने वनवासिने ॥ ३॥

तत्त्वज्ञानसुधासिन्धुनिमग्नाय महीयसे ।
आञ्जनेयाय शूराय सुग्रीवसचिवाय ते ॥ ४॥

जन्ममृत्युभयघ्नाय सर्वक्लेशहराय च ।
नेदिष्ठाय प्रेतभूतपिशाचभयहारिणे ॥ ५॥

यातनानाशनायास्तु नमो मर्कटरूपिणे ।
यक्षराक्षसशार्दूलसर्पवृश्चिकभीहृते ॥ ६॥

महाबलाय वीराय चिरञ्जीविन उद्धते ।
हारिणे वज्रदेहाय चोल्लङ्घितमहाब्धये ॥ ७॥

बलिनामग्रगण्याय नमो नमः पाहि मारुते ।
लाभदोऽसि त्वमेवाशु हनुमन् राक्षसान्तक ।
यशो जयं च मे देहि शत्रून्नाशय नाशय ॥ ८॥

स्वाश्रितानामभयदं य एवं स्तौति मारुतिम् ।
हानिः कुतो भवेत्तस्य सर्वत्र विजयी भवेत् ॥ ९॥

इति श्री हृत्पुण्डरिकाधिष्ठितश्रीमत्परमहंसपरिव्राजकाचार्य
श्रीवासुदेवानन्दसरस्वतीकृतं मन्त्रात्मकं श्रीमारुतिस्तोत्रं सम्पूर्णम् ।



 